# पौराणिक पूजन प्रयोगः

अथाचमनम् ।

केशवाय नमः,  नारायणाय नमः, माधवाय नमः, इति त्रिरपः पिबेत् ।

अथ पवित्रधारणम् ।

स्नाने दाने जपे होमे स्वाध्याये पितृकर्मणि ।

पवित्रं तु करे कुर्यात् सौवर्णं राजतं तु वा ॥

कुशपाणिः सदा तिष्ठेन्नरो दम्भविवर्जितः ।

स नित्यं हन्ति पापानि तूलराशिमिवानिलः ॥

पवित्रधारको यश्च न स पापेन लिप्यते ।

पवित्रयुतहस्तस्य विद्रवन्ति दिशो दिश ॥

जपहोमहरा ह्येते असुरादिव्यरूपिणः ।

पवित्रकृत हस्तस्य विद्रवन्ति दिशो दिश ॥

इति पवित्रं धृत्वा ह्रीं इति प्राणानायम्य तिलकं धारयेत् ।

मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ।

शत्रूणां बुद्धिनाशोस्तु मित्राणामुदयस्तथा ॥

तिलकं कुङ्कमेनैव सदा मङ्गलकर्मणि ।

कारयित्वा सुमतिमान्न श्वेतचन्दनं मृदा ॥ इति ॥

## अथ गणपतिवन्दनम्

सिद्ध्या बुद्ध्या समेतं गुणगणनिचयं सर्वसङ्कष्टदाहं,

यक्षैरक्षोभि रीशप्रभृतिभिरमलै र्दानवैर्मानवैश्च ।

सर्वारम्भेभिवन्द्याङ्घ्रिकमलममलं भालचन्द्रं गजास्यं,

रक्ताभं पद्ममालाधरमभयकरं विघ्नराजं भजेहम् ॥

इति महागणपति नत्वा

श्री गणेशाय नमः । श्री सरस्वत्यै नमः । गुरुभ्यो नमः । अविघ्नमस्तु

## तीर्थावाहनम्

गङ्गे च यमुने चैव गोदावरि सरस्वति ।

नर्मदे सिन्धुकावेरि कलशे सन्निधिं कुरु ॥

गङ्गाद्यास्सर्वतीर्थदेवतास्सन्निहितास्सन्तु । इति तीर्थान्यावाह्य,

**संकल्पः**

देशकालौ सङ्कीर्त्य, करिष्यमाण कर्माङ्गत्वेन शरीरशुद्ध्यर्थं तीर्थस्नानं गव्यस्नानं तत्प्राशनं उपवीतधारणं च करिष्ये ॥ इति सङ्कल्पयेत् ।

## अथ तीर्थस्नानम् ।

देव देव जगन्नाथ शङ्खचक्रगदाधर ।

आज्ञां देहि च मे विष्णो तवतीर्थावगाहने ॥

नमः पुण्यजले देशे नमः सागरगामिनि ।

नर्मदे सिन्धु कावेरी जलेस्मिन् सन्निधिं कुरु ॥

सागरः स्वननिर्घोषदण्डहस्तसुरान्तक ।

जगत्स्रष्टर्जगन्मर्दिन्नमामि त्वां सुरेश्वर ॥

तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।

भैरवाय नमस्तुभ्यं अनुज्ञां दातुमर्हसि ॥

उत्तिष्ठतु महाभूता ये भूता भूमिपालकाः ।

भूतानामविरोधेन स्नानकर्म समारभे ॥

विष्णुपादाग्रसम्भूते गङ्गे त्रिपथगामिनि ।

धर्मद्रवेति विख्याता पापं मे हर जाह्नवी ॥

जाह्नवी सर्वतः पुण्या ब्रह्महत्याघहारिणी ।

वाराणस्यां विशेषेण गङ्गाह्युत्तरवाहिनी ॥

मज्जन्ति मुनयः सर्वे त्वमेकः किं न मज्जसि ।

मुक्तिस्त्वद्दर्शनाद्देवी न जाने स्नानजं फलम् ॥

प्रभाते वहते गङ्गा मध्याह्ने तु सरस्वती ।

अपराह्नेन्यतीर्थानि रात्रौ वहति नर्मदा ॥

विष्णुपादाग्रसम्भूते गङ्गेत्रिपथगामिनि ।

धर्मद्रवेति विख्याता पापं मे हर जाह्नवी ॥

कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ।

कुशाग्रे शङ्करो देवः तेन नश्यतु पातकम् ॥ इति ॥

## अथ गव्यस्नानम् ।

गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् ।

सर्वपापविशुद्ध्यर्थं पञ्चगव्यं पुनातु माम् ॥ इति ॥

## अथ पञ्चगव्यप्राशनम् ।

यत्वगस्थिगतं पापं देहे तिष्ठति मामके ।

प्राशनात्पञ्चगव्यस्य दहत्वग्निरिवेन्धनम् ॥ ह्रीं इति प्राशयेत् ।

## अथोपवीतधारणम् ।

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।

आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥

**इत्युपवीतं धृत्वा ,प्राणानायम्य ,आचम्य ,**

**अथ स्वस्तिवाचनम् ॥**

सुमुखश्चैकदंतश्च कपिलो गजकर्णकः ॥

लंबोदरश्च विकटो विघ्ननाशो विनायकः ॥ ३ ॥

धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः ।

द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ ४ ॥

विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ॥

संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ५ ॥

शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ।

प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये ॥ १ ॥

अभीप्सितार्थसिद्ध्यर्थं पूजिता यः सुरासुरैः ॥

सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ २ ॥

करोतु स्वस्ति ते ब्रह्मा स्वस्ति वापि द्विजातयः ॥

सरीसृपाश्च ये श्रेष्ठास्ते भ्यस्तै स्वस्ति सर्वदा ॥ १ ॥

ययातिनहुषश्चैव धुंधुमारी भगीरथः ॥

तुभ्यं राजर्षयः सर्वे स्वस्ति कुर्वैतु नित्यशः ॥२॥

स्वस्ति तेस्तु द्विपादेभ्यश्चतुरुपादेभ्य एव च ॥

स्वस्यस्त्वपाद केभ्यश्च सर्वेभ्यः स्वस्ति सर्वदा ॥३॥

स्वाहा स्वधा शची चैव स्वस्ति कुर्वैतु ते सदा॥

लक्ष्मीररुंधती चैव कुरुतां स्वस्ति तेऽनघ ॥ ४ ॥

असितो देवलश्चैव विश्वामित्रस्तथॉगिराः ॥

स्वस्ति तेद्य प्रयच्छंतु कार्तिकेयश्च षण्मुखः ॥ ५॥

विवस्वान भगवान्स्वस्ति करोतु तव सर्वदा ॥

दिग्गजाश्चैव चत्वारः क्षितिथे उन ग्रहाः ॥ ६ ॥

अधस्ताद्धरणी यासी नागो धारयते सदा ॥

शेषश्च पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु ॥ ७ ॥

**ततो प्रधानसङ्कल्पं कुर्यात्**

........देशकालकीर्नान्ते .......(अमुक) कर्म करिष्ये ॥ तदादौ निर्विघ्नार्थं गणपतिपूजनं,क्षेत्रपालवास्तोष्पति प्रार्थनं , शान्त्यर्थं पुष्ट्यर्थं तुष्ट्यर्थं वृद्ध्यर्थं च ब्राह्मणैः सह पुण्याहवाचनं च करिष्ये ॥ इति ॥

## अथ गणपतिपूजनम् ।

श्वेताङ्गं श्वेतवस्त्रं सितकुसुमगणैः पूजितं श्वेतगन्धैः,

क्षीराब्धौ रत्नदीपैः सुरतरुविमले रत्नसिंहासनस्थम् ।

दोर्भिः पाशाङ्कुशेष्टाभयधृतविशदं चन्द्रमौलि त्रिणेत्रं,

ध्यायेच्छान्त्यर्थमीशं गणपति ममलं श्रीसमेतं प्रसन्नम् ॥

हे हेरम्ब त्वमेह्येहि अम्बिकात्र्यम्बकात्मज ।

सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभ पितः प्रभो ॥

नागास्य नागहारत्वं गणराज चतुर्भुज ।

भूषितः स्वायुधैः र्दिव्यैः पाशां कुशपरश्वधैः ॥

आवाहयामि पूजार्थं रक्षार्थं च मम क्रतौ ।

इहागत्य गृहाण त्वं पूजां रक्ष क्रतुं च मे ॥

**श्री महागणपतये नमः श्री महागणपतिमावाहयामि ।**

**इत्यावाह्य, पूजयेत् ।**

गणपति और गौरीकी पूजा

गणपति और गौरीकी पूजा

(पूजामें जो वस्तु विद्यमान न हो उसके लिये 'मनसा परिकल्प्य समर्पयामि' कहे । जैसे, आभूषणोके लिये 'आभूषणं मनसा परिकल्प्य समर्पयामि।)

हाथमें अक्षत लेकर ध्यान करे-

भगवान गणेश का ध्यान-

गजाननं भूतगणादिसेवितं कपित्थजम्भूफलचारुभक्षणम् ।

उमासुतं शोकविनाशकारकं नमामि विघ्नेश्वरपादपङ्कजम् ॥

**भगवती गौरीका ध्यान -**

नमो देव्यै महादेव्यै शिवायै सततं नमः ।

नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥

श्रीगणेशाम्बिकाभ्यां नमः, ध्यानं समर्पयामि ।

## भगवान गणेश का आवाहन-

एह्येहि हेरम्ब महेशपुत्र समस्तविघ्नौघविनाशदक्ष ।

माङ्गल्यपूजाप्रथमप्रधान गृहाण पूजां भगवन् नमस्ते ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय गणपतये नमः, गणपतिमावाहयामि, स्थापयामि, पूजयामि च ।

**हाथके अक्षत गणेशजीपर चढ़ा दे । फिर अक्षत लेकर गणेशजीकी दाहिनी ओर गौरीजीका आवाहन करे ।**

## भगवती गौरी का आवाहन-

हिमाद्रितनयां देवीं वरदां शङ्करप्रियाम् ।

लम्बोदरस्य जननीं गौरीमावाहयाम्यहम् ॥

ॐ भूर्भुवः स्वः गौर्यै नमः, गौरिमावाहयामि, स्थापयामि, पूजयामि च ।

## प्रतिष्ठा -

अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।

अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥

गणेशाम्बिके! सुप्रतिष्ठिते वरदे भवेताम् ॥

प्रतिष्ठापूर्वकम् आसनार्थे अक्षतान् समर्पयामि गणेशाम्बिकाभ्यां नमः ।

**(आसनके लिये अक्षत समर्पित करे) ।**

**पाद्य, अर्घ्य, आचमनीय, स्नानीय, पुनराचमनीय**

महा -------------

एतानि पाद्यार्घ्याचमनीयस्नानीयपुनराचमनीयानि समर्पयामि । गणेशाम्बिकाभ्यां नमः ।

(इतना कहकर जल चढ़ा दे) ।

**दुग्धस्नान - (दूधसे स्नान कराये) ।**

कामधेनुसमुद्भूतं सर्वेषां जीवनं परमं ।

पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः । पयः स्नानं समर्पयामि ।

**दधिस्नान - (दधिसे स्नान कराये) ।**

पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ।

दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् ॥

ॐ भुर्भुवः स्वः गणेशाम्बिकाभ्यां नमः । दधिस्नानं समर्पयामि ।

**घृतस्नान -(घृतसे स्नान कराये) ।**

नवनीतसमुत्पन्नं सर्वसंतोषकारकम् ।

घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥

ॐ भुर्भुवः स्वः गणेशाम्बिकाभ्यांनमः । घृत स्नानं समर्पयामि ।

**मधु स्नान- (मधुसे स्नान कराये ) ।**

पुष्परेणुसमुद्भूतं सुस्वादु मधुरं मधु ।

तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, मधुस्नानं समर्पयामि ।

**शर्करा स्नान- (शर्करासे स्नान कराये ) ।**

इक्षुरससमुद्भूतां शर्करां पुष्टिदां शुभाम् ।

मलापहारिकां द्विव्यां स्नानार्थं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः । शर्करास्नानं समर्पयामि ।

**पंचामृत स्नान- (पंचामृतसे स्नान कराये) ।**

पञ्चामृतं मयानीतं पयो दधि घृतं मधु ।

शर्करया समायुक्तं स्नानर्थं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः ।

पञ्चामृतस्नानं समर्पयामि ।

**गन्धोदक स्नान- (गन्धोदकसे स्नान कराये ।)**

मलयाचलसम्भूतचन्दनेन विनिःसृतम् ।

इदं गन्धोदकस्नानं कुङ्कुम्युक्तं च गृह्यताम् ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, गन्धोदकस्नानं समर्पयामि ।

**शुद्धोदक स्नान - (शुद्ध जलसे स्नान कराये ।)**

गङ्गा च यमुना चैव गोदावरी सरस्वती ।

नर्मदा सिन्धु कावेरी स्नानार्थं प्रतिगृह्यताम् ॥

**कावेरी नर्मदा वेणी तुङ्गभद्रा सरस्वती ।**

**गङ्गा च यमुना तोयं मया स्नानार्थमर्पितम् ॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः । शुद्धोदकस्नानं समर्पयामि ।

**आचमन – (आचमनके लिये जल दे ।)**

शुद्धोदकस्नानान्ते आचमनीयं जलं समर्पयामि ।

**वस्त्र -**

शीतवातोष्णसंत्राणं लज्जाया रक्षणं परम् ।

देहालङ्करणं वस्त्रमतः शान्ति प्रयच्छ मे ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः । वस्त्रं समर्पयामि ।

**आचमन – (आचमनके लिये जल दे ।)**

वस्त्रान्ते आचमनीयं जलं समर्पयामि ।

**उपवस्त्र - (उपवस्त्र समर्पित करे ।)**

यस्याभावेन शास्त्रोक्तं कर्म किञ्चिन्न सिध्यति ।

उपवस्त्रं प्रयच्छामि सर्वकर्मोपकारकम ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, उपवस्त्रं (उपवस्त्राभावे रक्तसूत्रम् समर्पयामि ।)

**आचमन – (आचमनके लिये जल दे ।)**

उपवस्त्रान्ते आचमनीयं जलं समर्पयामि ।

**यज्ञोपवीत-(यज्ञोपवीत समर्पित करें ।)**

ॐ यज्ञोपवीतम् परमं पवित्रं प्रजापतेर्येत्सहजं पुरस्तात् ।

आयुष्यमग्रयं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ।

यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ।

नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ।

यज्ञोपवीतं मया दत्तं गृहाण परमेश्वर ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः । यज्ञोपवीतं समर्पयामि ।

**आचमन - (आचमनके लिये जल दे ।)**

यज्ञोपवीतान्ते आचमनीयं जलं समर्पयामि ।

**चंदन-(चंदन अर्पित करे ।)**

श्रीखण्डं चंदनं दिव्यं गन्धढ्यं सुमनोहरम् ।

विलेपनं सुरश्रेष्ठं! चन्दनं प्रतिगृह्यताम् ॥

ॐ भुर्भुवः स्वः गणेशाम्बिकाभ्यां नमः । चन्दनानुलेपनं समर्पयामि ।

**अक्षत- (अक्षत चढ़ाये ।)**

अक्षताश्च सुरश्रेष्ठ कुङ्कम्युक्ताः सुशोभिताः ।

मया निवेदिता भक्त्या गृहाण परमेश्वर ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, अक्षतान् समर्पयामि ।

**पुष्पमाला- (पुष्पमाला समर्पित करे ।)**

माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।

मयाहृतानि पुष्पाणि पूजार्थ प्रतिगृह्यताम् ॥

ॐ भुर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, पुष्पमालां समर्पयामि ।

दूर्वा- **(दूर्वाङ्कुर चढाये ।)**

दूर्वाङ्कुरान् सुहरितानमृतान् मङ्गलप्रदान् ।

आनीतांस्तव पूजार्थं गृहाण गणनायक ॥

ॐ भुर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, दूर्वाङ्कुरान् समर्पयामि ।

सिन्दूर- **(सिन्दुर अर्पित करे ।)**

सिन्दूर शोभनं रक्तं सौभाग्यं सुखवर्धनम् ।

सुभदं कामदं चैव सिन्दूर प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः । सिन्दूर समर्पयामि ।

**अबीर गुलाल आदि नाना परिमल द्रव्य - (अबीर गुलाल आदि चढ़ाये ।)**

अबीरं गुलालं च हरिद्रादिसमन्वितम् ।

नाना परिमलं द्रव्यं गृहाण परमेश्वर ॥

ॐ भुर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, नानापरिमलद्रव्याणि समर्पयामि ।

**सुगन्धिद्रव्य- (सुगन्धित द्रव्य अर्पण करे ।)**

दिव्यगन्धसमायुक्तं महापरिमलाद्भुतम् ।

गन्धद्रव्यमिदं भक्त्या दत्तं वै परिगह्यताम् ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, सुगन्धिद्रव्यं समर्पयामि ।

**धूप - (धूप दिखाये ।)**

वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।

आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, धूपमाघ्रापयामि ।

**दीप - (दीप दिखाये ।)**

साज्यं चं वर्तिसंयुक्तं वह्निना योजितं मया ।

दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥

भक्त्या दीपं प्रयच्छामि देवाय परमात्मने ।

त्राहि मां निरयाद् घोराद् दीपज्योतिर्नमोऽस्तुते ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, दीपं दर्शयामि ।

**हस्तप्रक्षालन - ॐ हृषिकेशाय नमः' कहकर हाथ धो ले ।**

**नैवेद्य अर्पण - (नैवेद्य निवेदित करे ।)**

नैवेद्यको प्रोक्षित कर गन्ध-पुष्पसे आच्छादित करे । तदनन्तर जलसे चतुष्कोण घेरा लगाकर भगवानके आगे रखे ।

**ॐ अमृतोपस्तरणमसि स्वाहा । ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ समानाय स्वाहा । उदानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ अमृतापिधानमसि स्वाहा ।**

**सत्पात्रसिद्धं सुहविः विविधानेकभक्षणम् ।**

**निवेदयामि देवाय सानुगाय गृहाण तत् ॥**

शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च ।

आहारं भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, नैवेद्य निवेदयामि ।

**आचमन** -(जल समर्पित करे ।)

'नैवेद्यान्ते आचमनीयं जलं समर्पयामि'

**ऋतुफल**-(ऋतुफल अर्पित करे ।)

इदं फलं मया देव स्थापितं पुरतस्तव ।

तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, ऋतुफलानि समर्पयामि ।

**आचमन** - **(आचमनीय जल अर्पित करे।)**

'फलान्ते आचमनीयं जलं समर्पयामि ।

**उत्तरापोऽशन**- **(जल दे।)**

'उत्तरापोऽशनार्थे जलं समर्पयामि । गणेशाम्बिकाभ्यां नमः' ।

करोद्वूर्तनः - **(मलयचन्दन समर्पित करे ।)**

चन्दनं मलयोद्भूतम् कस्तूर्यादिसमन्वितम् ।

करोद्वर्तनकं देव गृहाण परमेश्वर ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, करोद्वूर्तन चन्दनं समर्पयामि ।

**ताम्बूल** - **( इलायची, लौंग-सुपारी के साथ ताम्बूल (पान) अर्पित करे ।)**

पुंगीफल महद्दिव्यं नागवल्लीदलैर्युतम ।

एलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, मुखवासार्थम् एलालवंगपुंगीफलसहितं ताम्बूलं समर्पयामि ।

दक्षिणा- **(द्रव्य दक्षिणा समर्पित करे।)**

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।

अनन्तपुण्यफलदमतः शान्ति प्रयच्छ मे ॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, कृतायाः पूजायाः साद्गुण्यार्थे द्रव्यदक्षिणां समर्पयामि ।

**आरती- (कर्पूरकी आरती करे, आरतीके बाद जल गिरा दे ।)**

कदलीगर्मसम्भूतं कर्पूरं तु प्रदीपितम् ।

आरार्तिकमहं कुर्वे पश्य मे वरदो भव ॥

**कर्पूरकं महाराज रम्भोद्भूतं च दीपकम् ।**

**मङ्गलार्थं महीपाल सङ्गृहाण सुरेश्वर ॥**

ॐ भुर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, आरार्तिकं समर्पयामि ।

**पुष्पांजलि- (पुष्पाञ्जलि अर्पित करे)**

नानासुगन्धिपुष्पाणि यथाकालोद्भवानि च ।

पुष्पाञ्जलिर्मया दत्ता गृहाण परमेश्वर ॥

ॐ भुर्भुव स्वः गणेशाम्बिकाभ्या नमः, पुष्पाञ्जलि समर्पयामि ।

**नमस्कारे तथा प्रार्थने -**

**नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः ।**

**नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥**

विश्वरूप स्वरूपाय नमस्ते ब्रह्मचारिणे ।

भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥

लम्बोदरनमस्तुभ्यं सततं मोदकप्रिय ।

निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥

त्वां विघ्नशत्रुदलनेति च सुन्दरेति

भक्तप्रियेति सुखदेति वरप्रदेति ।

विद्याप्रदेत्यघहरेति च ये स्तुवन्ति

तेभ्यो गणेशवरदो भव नित्यमेव ॥

अनेन पूजनेन गणपतिः प्रीयताम् । इति ॥

## अथ कलशस्थापनम्

**अथ भूमि स्पृशेत् -**

विश्वाधारासिधरिणी शेषनागोपरिस्थिता ।

उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ इति ॥

**अथ कलशं-**

हेमरूप्यादि सम्भूतं ताम्रजं सुदृढं नवम् ।

कलशं धौतकल्माषं छिद्रवर्णविवर्जितम् ॥ इति ॥

अथ जलपूरणं -

जीवनं सर्वजीवानां पावनं पावनात्मकम् ।

बीजं सर्वौषधीनां च तज्जलं पूरयाम्यहम् ॥ इति ॥

अथ वस्त्राच्छादनं -

सूत्रं कार्पाससम्भूतं ब्रह्मणा निर्मितं पुरा ।

येन बद्धं जगत्सर्वं वेष्टनं कलशस्य च ॥ इति ॥

अथ ओषध्यः -

देवेभ्यः पूर्वतो जाता देवेभ्यः स्त्रियुगं पुरा ।

शतं तनुश्च या बभ्रू जीवनं जीवनाय च ॥ इति ॥

अथ दूर्वाः -

दूर्वेह्यमृतसम्पन्ने शतमूले शतांकुरे ।

शतं पातकसम्पत्ती शतमायुष्यवर्धिनी ॥ इति ॥

## अथ पल्लवान् -

अश्वत्थोदुम्बरप्लक्षच्यूतन्यग्रोधपल्लवाः ।

पञ्चभगा इति प्रोक्ताः सर्वकर्मसु शोभनाः ॥ इति ॥

## अथ पुष्पाणि -

विविधं पुष्पसञ्जातं देवानां प्रीतिवर्धनम् ।

क्षिप्रं यत्कार्यसम्भूतं कलशे प्रक्षिपाम्यहम् ॥ इति ॥

## अथ मृत्तिकाः -

अश्वस्थानाद्गजास्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ।

राजद्वाराच्च गो गोष्ठान्मृदमानीय निक्षिपेत् ॥ इति ॥

## अथ रत्नानि-

कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् ।

एतानि पञ्चरत्नानि कलशे प्रक्षिपाम्यहम् ॥ इति ॥

## अथ पूर्णपात्रापिधानं -

पिधानं सर्ववस्तूनां सर्वकार्यार्थ साधनम् ।

सम्पूर्णः कलशो येन पात्रं तत्कलशोपरि ॥ इति ॥

## अथ वरुणपूजनम्

नमो नमस्ते स्फटिकप्रभाय, सुश्वेतहाराय सुमङ्गलाय ।

सुपाशहस्ताय झषासनाय, जलाधिनाथाय नमो नमस्ते ॥

पाशहस्तं च वरुणमम्भसापतिमीश्वरम् ।

आवाहयामि यज्ञेस्मिन् पूजेयं प्रतिगृह्यताम् ॥ इत्यावाह्य, पूजयेत् ।

## तत्र स्नाने विशेषः -

परमानन्दबोधाब्धिनिमग्ननिजमूर्तये ।

साङ्गोपाङ्गमिदं स्नानं कल्पयामि जलाधिप ॥

## नैवेद्ये -

सत्पात्रसिद्धं सुहविः विविधानेकभक्षणम् ।

निवेदयामि देवाय सानुगाय गृहाण तत् ॥

## नीराजनेपि-

कर्पूरकं महाराज रम्भोद्भूतं च दीपकम् ।

मङ्गलार्थं महीपाल सङ्गृहाण सुरेश्वर ॥

## नमस्कारे -

नमो नमस्ते स्फटिकप्रभाय, सुश्वेतहाराय सुमङ्गलाय ।

सुपाशहस्ताय झषासनाय, जलाधिनाथाय नमो नमस्ते ॥

## तत्र प्रार्थना -

शिवः स्वयं त्वमेवासि विष्णुत्वं च प्रजापतिः ।

आदित्यावसवो रुद्राः विश्वेदेवाः सपैतृकाः ॥

त्वयि तिष्ठन्ति सर्वेपि यतः कामफलप्रदाः ।

त्वत्प्रसादिमं यज्ञं कर्तुमीहेजलोद्भव ॥

पाशपाणे नमस्तुभ्यं पद्मिनी जीवनायक ।

पुण्याहवाचनं यावत्तावत्त्वं संस्थितो भव ॥ इति ॥

अनेन पूजनेन वरुणः प्रीयताम् ।

ततः कलशं स्पृष्ट्वा देवता भावयेत् ।

कलशस्य मुखे विष्णुः --- कलशे सन्निधि कुरु ॥ इति ॥

अथ यजमानः मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । इत्याशिषो गृहीत्वा,

## पुण्याहवाचनम्

ब्राह्मणहस्ते जलं ददाति । ह्रीं आपः शिवा आपः सन्तु । ह्रीं गन्धाः सुगन्धाः पान्तु । ह्रीं अक्षताः अस्त्वक्षतमरिष्टं च । ह्रीं सुमनसः सौमनस्यमस्तु । ह्रीं दक्षिणाः स्वस्ति दक्षिणाः पान्तु । सन्तु पञ्चोपचाराः । शान्तिरस्तु ॥

कलशं स्पृष्ट्वा वदति ।

दीर्घा नागा नद्यो गिरयस्त्रीणिविष्णुपदानि च ।

तेनायुः प्रमाणेन पुण्यं पुण्याहमस्तु मे ॥ इति ॥

पुण्यं पुण्याहं दीर्घमायुरस्तु ।

पत्न्यान्वारब्धयजमानदक्षिणबाहुनान्वारब्धः कलशधारको मनः समाधीयताम् । इति वदति ।

ब्राह्मणाः -समाहितमनसस्स्मः ॥ इति प्रतिवदन्ति ।

प्रसीदन्तु भवन्तः प्रसन्नाः स्मः ॥

शान्तिरस्तु । पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । शिवं कर्मास्तु । इत्युक्तं प्रतिब्रूयात् ॥

ब्राह्म्यं पुण्यं महर्यच्च सृष्ट्युत्पादनकारकम् ।

वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥

मह्यं सह कुटुम्बिने पुण्यं पुण्याहं भवन्तो ब्रुवन्तु ।---

पुण्यं पुण्याहम् । इति प्रतिवचनम् ।

स्वस्त्यस्तु या विनाशाख्या पुण्यकल्याणवृद्धिदा ।

विनायकप्रिया नित्यं तां च स्वस्ति ब्रुवन्तु नः ॥

मह्यं सह कुटुम्बिने स्वस्त्यस्त्विति भवन्तो ब्रुवन्तु ।---

आयुष्मते स्वस्ति । इति प्रतिवचनम् ।

सागरस्य यथावृद्धिर् महालक्ष्म्यादिभिः कृता ।

सम्पूर्णा सुप्रभा वाचा तां च ऋद्धिं ब्रुवन्तु नः ॥

मह्यं सह कुटुम्बिने ऋद्धिं भवन्तो ब्रुवन्तु । ---

कर्म ऋद्ध्यताम् । इति प्रतिवचनम् ।

समुद्रमथनाज्जाता जगदानन्दकारिका ।

हरिप्रिया च माङ्गल्य तां श्रियं च ब्रुवन्तु नः ॥

मह्यं सह कुटुम्बिने श्रीरस्त्वित ---ि भवन्तो ब्रुवन्तु ।

अस्तु श्रीः । इति प्रतिवचनम् ।

पृथिव्यामुधृता यान्तु यत्कल्याणं पुराकृतम् ।

ऋषिभिः सिद्धगन्धर्वैः तत्कल्याणं ब्रुवन्तु नः ॥

मह्यं सह कुटुम्बिने कल्याणं भवन्तो ब्रुवन्तु । ---

अस्तु कल्याणम् । इति प्रतिवचनम् ।

अथ कलश जलधारां करोति ।

शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगा सर्वे ग्रहाः प्रीयन्ताम् । कर्माङ्गदेवताः प्रीयन्ताम् ।

शकुननिमित्तस्वप्नाः शिवा भवन्तु । आयुषोभिवृद्धिरस्तु आयुषोभि वृद्धिरस्तु । शिवं शिवमस्तु । सर्वग्रहसंस्थित्यमस्तु । सत्या एता आशिषः सन्तु । बहिर्देशे अरिष्टनिरसनमस्तु ।न इति किञ्चित्कलशोदकमीशान्ये निनीय, यत्पापं तत्प्रतिहतमस्तु ।

यच्छ्रेयस्तदस्तु । उत्तरे कर्मण्यविघ्नमस्तु । उत्तरोत्तरमहरहरभिवृद्धिरस्तु । उत्तरोत्तराः क्रिया श्शुभास्सम्पद्यन्ताम् । तिथिकरणमुहूर्तनक्षत्रदिग्देवताः प्रीयन्ताम् ॥

अथ कलशजलमन्योन्यं संस्राव्य तज्जलं पात्रान्तरे निनीय, तत्र हिरण्यं निधाय, दर्भैर्ब्राह्मणाः सपत्नीकं यजमानं संस्कार्यं च प्रोक्षेयुः । तत्काले पत्नी वामभागे उपविशति ॥

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।

वासुदेवो जगन्नाथः तथा सङ्कर्षणो विभुः ॥

प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयायते ।

आखण्डलोग्निर्भगवान् यमो वै निऋतिस्तथा ॥

वरुणः पवनश्चैव धनाध्यक्षस्तथाशिवः ।

ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥

कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।

बुद्धिर्लज्जावपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥

एतास्तामभिषिञ्चन्तु देवपत्न्यः समागताः ।

आदित्यश्चन्द्रमा भौम बुध जीव सितार्कजाः ॥

ग्रहास्त्वामभिषिञ्चन्तु राहुकेतुश्च तर्पिताः ।

देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।

ऋषयो मुनयो गावो देवमातर एव च ॥

देवपत्न्योद्रुमानागा दैत्याश्चाप्सरसां गणाः ।

अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥

औषधानि च रत्नानि कालस्यावयवाश्च ये ।

सरितः सागराः शैलास्तीर्थानि जलदानदाः ॥

एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ।

सहस्राक्षं शतधारं ऋषिभिः पावनं कृतम् ॥

तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ।

भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः ॥

भगमिन्द्रश्च वायुश्च भगं सप्तऋषयो दधुः ।

यत्ते केशेषु दौर्भाग्यं सीमन्ते यश्च मूर्धनि ॥

ललाटे कर्णयो रक्ष्णोरापो निघ्नन्तु ते सदा ।

अमृताभिषेकोस्तु ॥

अथ गृहं प्रोक्षणं-

वास्तोष्पते भूमिशयान देव, पाहि त्वमस्मान् सकलादरिष्टात् ।

चतुष्पदां च द्विपदां शिवं नो, भवत्वभीक्ष्णं तव सुप्रसादात् ॥

इति प्रोक्ष्य,

शिवं शिवं शिवं इति शेषजलमप्सु विसृजेत् ।

अनेन पुण्याहवाचनकर्मणा श्री परमेश्वरः प्रीयतां इति समर्प्य,

श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ।

आयुष्यं तेज आरोग्यं देहि मे जलनायक ॥

इति प्रसादं स्वीकृत्य,

## विसर्जन

यान्तु देवगणाः सर्वे पूजामादाय मत्कृताम् ।

इष्टकाम्यार्थसिद्ध्यर्थं पुनरागमनाय च ॥

इति विसृजेत् ॥

ततः पुण्याहवाचनफल समृद्ध्यर्थं अस्मै आचार्याय यथाशक्ति फलहिरण्य तण्डुलं सम्प्रददे न मम । इति त्यजेत् ॥

आचार्यः पुण्याहवाचन फलसमृद्धिरस्तु इति प्रतिवदति ।

## अथ कृच्छ्राचरणम्

## सङ्कल्पः

करिष्यमाण अमुक कर्मणि मम देहमनोविशुद्धिपूर्वकं अधिकारसिद्ध्यर्थं कृच्छ्रप्रत्याम्नायत्वेन हिरण्यदानं करिष्ये ।

नमः सकलकल्याणदायिने ब्रह्मरूपिणे ।

सदसे सर्वपूज्याय दुष्कृतारण्यवह्नये ॥

इति प्रदक्षिणं कृत्वा "ह्रीं हिरण्य गर्भगर्भस्थं`` इति पठित्वा, मम देहमनो विशुद्धिपूर्वकं करिष्यमाण कर्मणि अधिकारसिद्ध्यर्थं कृच्छ्रप्रत्याम्नायत्वेन परिषदुपविष्टेभ्यः ब्राह्मणेभ्यः यथाशक्तिदक्षिणां विभज्य, दातुमहमुत्सृजे ।

## इति त्यजेत् ॥

सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः ।

कुर्वन्तु मम देहस्य संशुद्धि गतकिल्बिषाः ॥

पूज्यैः कृतपवित्रोहं भविष्याम्यनघस्तथा ।

प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ ॥

पुरा कृतं महाघोरं ज्ञाताज्ञातं च किल्बिषम् ।

जन्मतोद्य दिनं यावत्तस्मात्पापात्पुनन्तु माम् ॥

अशेषे हे परिषत् भवत्पादमूले समर्पितामिमामल्पीयसीमपि दक्षिणां !। यथोक्तदक्षिणामिव स्वीकृत्य मम देहमनोविशुद्धिपूर्वकं करिष्यमाण कर्मणि अधिकारसिद्धिरस्त्विति-अनुगृहाण ॥

इति परिषदं नमस्कृत्य अनुज्ञां सम्पादयेत् ।

अनेन कृच्छ्राचरणेन श्री परमेश्वरः प्रीयताम् ॥ इति ॥

प्रधान संकल्प के बाद आचार्य ऋत्विक वरण करे (प्रधान सङ्कल्पान्ते ऋत्विजो वरयेत् (

यथा- हाथ में जल अक्षत पुष्प लेकर वरण संकल्प करे

"अमुक कर्माङ्गत्वेन आचार्यादि ऋत्विजो वरयिष्ये ।" इति सङ्कल्प्य ब्राह्मणान्नमस्कृत्य,

ब्राह्मणों आचार्यों का वरण संकल्प कर उनको तिलक अक्षत पुष्पमाला और वस्त्रादि से निम्न मन्त्रों के पाठ पूर्वक अर्चन करे-

आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ।

तथा त्वं मम यागेस्मिन्नाचार्यो भव सुव्रत ॥

(इति स्व दक्षिणपाणिना तस्य दक्षिणपाणि स्पृष्ट्वा वरयित्वा)

पुनः अपने दाहिने हाथ से आचार्य का दाहिना हाथ पकड़ कर उनसे अपने यज्ञ में आचार्य ऋत्विक बनने का अनुरोध करे /

भवन्तः सर्वधर्मज्ञाः सर्वधर्मभृतां वराः ।

**वितते मम यज्ञेस्मिन् ऋत्विजो भवत द्विजाः ॥**

**इति ऋत्विजः**

**अथ गृहीत कुसुमाञ्जलिना यजमानेन-ब्राह्मण प्रार्थना -**

**ब्राह्मणास्सन्तु मे शास्ताः पापात्पान्तु समाहिताः ।**

**देवानां चैव दातारः पातारः सर्वदेहिनाम् ॥**

**जपयज्ञैः तथा होमैर्दानैश्च विविधैः शुभैः ।**

**देवानां च पितृणां च तृप्त्यर्थं याचकाः स्मृताः ॥**

**येषां देहे स्थिता देवाः पावयन्ति जगत्त्रयम् ।**

**ते मां रक्षन्तु सततं जपयज्ञे व्यवस्थिताः ॥**

**अदुष्टभाषणास्सन्तु मा सन्तु परनिन्दकाः ।**

**ममापि नियमाह्येते भवन्तु भवतामपि ॥ इति ॥**

**अथ नवग्रहपूजनम् ॥**

हस्ते पुष्पाण्यादाय ॥

पद्मयोनि चतुर्मुर्ति वेदगर्भ पितामहम् ॥

आवाहयेत्तं ब्रह्माणं कमलोद्भूतमंगलम् ॥ १ ॥ भगवन् ब्रह्मन्निहागच्छ इह तिष्ठ ॥

देवदेवं जगन्नाथं भक्तानुग्रहकारकम् ॥

चतुर्भुजं रमानाथं विष्णुमावाहयाम्यहम् ॥ २ ॥ भगवन विष्णो इहा० ॥

पंचवक्त्र वृषारूढमुमेशं च त्रिलोचनम् ॥

आवाहयामि देवेश शिवं खंटागधारिणम् ॥ ३ ॥ भगवन् शिव इहागच्छ० ॥

दिवाकरं सहस्रांशु सुरासुरनमस्कृतम् ॥

लोकनाथं विश्वनेत्रं सूर्यमावाहयाम्यहम् ॥ १ ॥

भगवन्सूर्य इहागच्छ इहतिष्ठ ॥

हिमरश्मिनिशानाथं क्षीरसागरसंभवम् ॥

ओषधीनां तु राजानं सोममावाहयाम्यहम् ॥ २ ॥

भो सोम इहागच्छ इह तिष्ट ॥

धरणीगर्भसंभूतं लोहितांग सुवर्चसम् ॥

कुमारं क्रूरकर्माणं भौममावाहयाम्यहम् ॥ ३ ॥

भो भौम इहागच्छ इह तिष्ठ ॥

बुधं बुद्धिप्रदातारं सोमवंशविवर्धनम् ॥

यजमानहितार्थाय बुधमावाहयाम्यहम् ॥ ४ ॥

भो बुध इहागच्छ इह तिष्ठ ॥

बुद्धिश्रेष्टॉगिरःपुत्रो देवानां यो गुरुः स्मृतः ॥

तमिद्रमंत्रणं भक्त्या गुरुमावाहयाम्यहम् ॥ ५ ॥

भोगुरो इहागच्छ इह तिष्ठ ॥

प्रविष्टो जठरं शंभोर्निसृतः पुनरेव यः ॥

तं सुरारिगुरुं भक्त्या शुक्रमावास्याम्यहम् ॥६॥

भो शुक्र इहागच्छ इह तिष्ठ ॥

धर्मराजानुजं देवं भिन्नजनसमप्रभम् ॥

छायामार्तडसंभूतं शनिमावाहयाम्यहम् ॥ ७ ॥

भोः शनैश्चर इहागच्छ इह तिष्ठ ॥

चक्रेण छिन्नमूद्धीने विष्णुना च निरीक्षितम् ।

सैहिकेयं महाकायं राहुमावाहयाम्यहम् ॥ ८ ॥

भो राहो इहागच्छ इह तिष्ठ ॥

अंजनानं महारोद्र बहुरूपं महाग्रहम् ॥

क्रूरकर्ममहाकायं केतुमावाहयाम्यहम् ॥ ९ ॥

भोः केता इहागच्छ इह तिष्ठ ॥

एवमावाहनं स्थापनं च कृत्वा ।

सूर्यादिग्रहेभ्यो नमः ॥ इति नाममंत्रण षोडशोपचारः पूजयेत् ॥

**ततः प्रार्थना**

बह्मामुरारिस्त्रिपुरान्तकारी भानुः शशी भूमि सुतो बुधश्च ॥

गुरुश्च शुक्रः शानिराकेतवः सर्व ग्रहाः शातिकरा भवंतु ॥ १ ॥

**मातृकापूजनम्**

तच्च यथाचारं कुर्यात् । तत्रादौ मातृकापूजनम् । कर्ता तंडुलपुंजेषु पूगीफलादिषु वा देवता आवाहयेत् । यथा - गौर्यै नमः गौरीमावाहयामि । एवमग्रेऽपि । पद्मायै० शच्यै० मेधायै० सावित्र्यै० विजयायै० जयायै० देवसेनायै० स्वधायै० स्वाहायै० मातृभ्यो० लोकमातृभ्यो० धृत्यै० पुष्ट्यै० तुष्ट्यै० आत्मनः कुलदेवतायै० ब्राह्मयै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै० चामुंडायै० गणपतये० दुर्गायै० क्षेत्रपालाय० वास्तोष्पतये नमः वास्तोष्पति आवाहयामि इत्यावाह्य एता देवताः सुप्रतिष्ठिता भवंतु । गौर्याद्यावाहितदेवताभ्योनमः ध्यायामि इत्यादि षोडशोपचारैः संपूज्य **वसोर्धारा पूजनं कुर्यात्।**

## सप्तवसोर्द्धारा

**ध्यान** - पुष्प लेकर ध्यान करे।-

ॐ वसोर्धारा मण्डलस्थ सप्तघृत मातृकाभ्यः नमः

**आवाहन पूजन-**

ॐ श्रियै नमः आवाहयामि स्थापयामि पूजयामि

ॐ धृत्यै नमः आवाहयामि स्थापयामि पूजयामि

ॐ पुष्ठयै० नमःआवाहयामि स्थापयामि पूजयामि

ॐ सरस्वत्यै० नमःआवाहयामि स्थापयामि पूजयामि

ॐ लक्ष्म्यै०नमःआवाहयामि स्थापयामि पूजयामि

ॐ मेधायै०नमःआवाहयामि स्थापयामि पूजयामि

ॐ श्रद्धायै० नमःआवाहयामि स्थापयामि पूजयामि

उपलब्ध उपचारों से पूजन करें।

अनंतर मातृकाओ की स्तुति करें।

गौरी पद्मा शची मेधा सावित्री विजया जया ।

देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥

धृतिः पुष्टिः तथा तुष्टिः आन्मनः कुलदेवताः ।

गणेशेनाधिका ह्येता वृद्धौ पूज्याश्च षोडश (चतुर्दश) ॥

श्रीः लक्ष्मीः धृतिः मेधा पुष्टिः श्रद्धा (स्वाहा प्रज्ञा) सरस्वती ।

मांगल्येषु प्रपूज्यन्ते सप्तैताः घृतमातरः ॥

वसोर्धारा पूजन अनंतरे नांदीश्राद्धं कुर्यात् ॥

## नांदीश्रादधम्

तत्र मातृपितृमातामहेषु जीवत्सु नांदीश्रादधलोप एवेति केचिन्मतं चिन्त्यम् । [ जीवेत्तु यदि वर्गादयः तं तु वर्गं

परित्यजेत् ] अत्र सर्वं सव्येन देवतीर्थेन यवैश्च पित्र्येऽपि । तद्यथा - सत्यवसुसंज्ञका विश्वेदेवाः नांदीमुखाः इदं वः पाद्यं नमः इति सयवाक्षतदूर्वायुतजलं क्षिपेत् । मातृपितामहीप्रपितामह्यः नांदीमुख्यः इदं वः पाद्मं नमः । पितृपितामहप्रपितामहाः नांदीमुखाः इदं वः पाद्यं नमः । मातामह मातुः पितामह मातुः प्रपितामहाः पत्नीसहिताः नांदीमुखाः इदं वः पाद्यं नम ॥ सत्यवसुसंज्ञका विश्वेदेवाः नांदीमुखाः इदं वः

आसनगंधाद्युपचारकल्पनं नमः । मातृपितामहीप्रपितामह्यः नांदीमुख्यः इदं वः आसनगंधा० । पितृपितामह० नांदीमुखाः इदं वः आसनगंधा० । मातामह मातुः पितामह मातुः प्रपिता० पत्नीस० नांदीमुखाः इदं वः आसन० ॥ गौर्यादिषोडशमातरः ब्राह्म्यादिसप्त मातरश्च गणपतिं दुर्गां क्षेत्रपालं वास्तोष्पतिं च इदं वः युग्मब्राह्मणभोजनपर्याप्तं यथाशक्तिहिरण्यनिष्क्रयीभूतं किञ्चिद्व्यवहारिकद्रव्यं नमः । सत्यवसु० नांदीमुखाः इदं

वः युग्मब्राह्मणभोजन० । मातामहमातुः० पत्नीस० नांदी० इदं वः युग्मब्राह्मणभोजन० ॥ कृतस्य नांदीश्राद्धस्य प्रतिष्ठाफलसिद्ध्यर्थं द्राक्षामलकनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे नमम ॥ मातापितामहीचैव तथैव प्रपितामही । पिता पितामहश्चैव तथैव प्रपितामहः ॥ मातामहस्ततत्पिता च प्रमातामहकादयः । एते भवंतु सुप्रीताः प्रयच्छंतु सुमंगलं ॥ इति प्रार्थ्य । अनेन नांदीश्राद्धेन नांदीमुखदेवताः प्रीयंतां वृद्धिः ॥ मातरि जीवति मातृभ्यो नमः । पितरि जीवति पितृभ्यो नमः इत्युच्चारणं कार्यम् । इति वृद्धिश्राद्धम् ॥

**ततः कुलदेवतापूजनं**

। जयंती मंगला काली भद्रकाली कपालिनी ॥

दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तु ते ॥ १ ॥

इति कुलदेवतां संपूजयेत् ॥

## हवन-प्रकरण

किसी पवित्र स्थानपर मिट्टीसे एक चौकोर वेदी बना लेनी चाहिये। हवनसे पूर्व हाथमें जल-अक्षत आदि लेकर इस प्रकार हवनका संकल्प करना चाहिये-

**सङ्कल्प**

ॐ विष्णुर्विष्णुर्विष्णुः पूर्वोच्चारितग्रहगणगुणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रः अमुकोऽहं (सपत्नीकः) कृतस्य अमुक कर्मणः साङ्गतासिद्ध्यर्थं यथोपस्थितसामग्रीभिः होमं करिष्ये।

(संकल्पका जल छोड़ दे।)

## कुशकण्डिकाविधान[१]

**पंचभू संस्कार**

हवनके लिये जो वेदी बनायी जाती है, उसे शुद्ध एवं पवित्र करनेके लिये तथा उसमें अग्नि स्थापितकरनेके लिये उसका संस्कार किया जाता है, जो पाँच प्रकारसे होता है, इसे पंच-भूसंस्कार कहते हैं। इन पाँच संस्कारों के नाम इस प्रकार हैं-**१.परिसमूहन, २. उपलेपन, ३.उल्लेखन या रेखाकरण, ४ .उद्धरण तथा (५)अभ्युक्षण या सेचन।**

**१.परिसमूहन-**

वेदीमें कोई कृमि, कीट आदि न रह जाय अतः उसके निवारणके लिये तीनकुशों के द्वारा दक्षिणसे उत्तरकी ओर वेदी को साफ करे और उन कुशों को ईशानकोणमें फेंक दे (**त्रिभिर्दर्भैः परिसमुह्य तान् कुशानैशान्यां परित्यज्य)**

**२. उपलेपन-**

पुराकालमें इन्द्रने वृत्र नामक महान् असुरका वध किया था। उस वृत्रासुरके मेद(चर्बी ) -से यह पृथ्वी व्याप्त हो गयी। अत: मेदयुक्त भूमिका संस्कार उपलेपन कहलाता है। इसके लियेगायके गोबर तथा जलसे वेदीको लीपना चाहिये। **(गोमयोदकेनोपलिप्य)**

**(३) उल्लेखन या रेखाकरण-**

स्रुवा के मूलसे वेदीके मध्य भागमें प्रादेशमात्र (अंगूठेसे तर्जनीकेबीचकी दूरी) लम्बी तीन रेखाएँपश्चिमसे पूर्वकी आर खींचे। रेखा खींचनेका क्रम दक्षिणसे प्रारम्भकरउत्तरकी ओर होना चाहिये। यह क्रिया उल्लेखन या रेखाकरण कहलाती है। **(स्फ्येन, स्रुवमूलेनकुशमूलेनवा त्रिरुल्लिख्य )**

**(४) उद्धरण-**

उन खींची गयी तीनों रेखाओंसे उल्लेखन-क्रमसे अनामिका तथा अंगुष्ठके द्वाराथोड़ी-थोड़ी मिट्टी निकालकर बायें हाथमें रखता जाय। बादमें सब मिट्टी दाहिने हाथपर रखकर ईशानकोणकीओर फेंक दे। यह क्रिया उद्धरण कहलाती है। **(अनामिकाङ्गुष्ठाभ्यां मृदमुदधृत्य)**

**(५) अभ्युक्षण या सेचन**[२] -

तदनन्तर गंगा आदि पवित्र नदियोंके जलके छींटोंसे वेदीको पवित्रकरना चाहिये। यह क्रिया अभ्युक्षण या सेचन कहलाती है। **(जलेनाभ्युक्ष्य)**

वेदीके पंच-संस्कार करनेके अनन्तर **कुशकण्डिकाविधानकी प्रधान क्रिया** करनी चाहियेजिसमेंप्राय: अग्नि-स्थापनसे आहुति प्रदान करनेतककी क्रियाएँ आती**आघार** और **आज्यभाग** नामवाली चारहै। सामान्यरूपसे उस प्रक्रियाको भी यहाँ दिया जा रहा है

सर्वप्रथम संस्कारित वेदीमें अग्निकी स्थापना करनी चाहिये। बड़े यज्ञ-यागादिमें प्राय: अरणि-मन्थनद्वाराअग्निका प्राकट्य किया जाता है। अन्यत्र प्राय: कपूर आदिको

प्रज्वलित कर अग्नि स्थापित की जाती है।समिधाएँ (यज्ञीयकाष्ठ) पलाश आदिकी होनी चाहिये। उन यज्ञीय काष्ठमें कोई कीड़े-मकोड़े प्रविष्टन हों, यह देख लेना चाहियेअन्यथा जीवहिंसा होगी। ये काष्ठ सूखे होने चाहिये। अग्निप्रज्वालनके लियेगायके गोबरके सूखे कण्डे का भी प्रयोग होता है।

**अग्नि-स्थापन**

किसी कांस्य अथवाताम्रपात्रमें या नये मिट्टीके पात्र(कसोरे) में स्थित पवित्रअग्निको वेदीके अग्निकोणमें रखे और इस अग्निमें से क्रव्यादांश निकालकर नैतृत्यकोणमें डाल दे। तदनन्तरअग्निपात्र कोस्वाभिमुख करतेहुएवेदीमें स्थापित करे। उस समययह मन्त्र पढ़े-

**ॐ अग्निदूतं पुरो दधे हव्यवाहमुप ब्रुवे। देवां२ आ सादयादिह ॥**

जिस पात्र में अग्नि लायी गयी है उस पात्र , अक्षतके साथ जल छिड़क दे। अग्निकी सुरक्षा के लियेकुछ इन्धन डाल दे। अग्नि को मुख से फूकना पड़े तो मुख और अग्नि के बीच में बांस नलीतृण या काष्ठ का व्यवधान अवश्य कर ले । गन्ध अक्षत पुष्पादि उपचारों से संक्षिप्त अग्निपूजन कर ले।

**आचार्य तथा ब्रह्मा का वरण-**

यज्ञकी रक्षा करनेवाले ब्राह्मणकों ब्रह्मा कहा जाता है।यदि प्रत्यक्ष ब्रह्मा का वरण न करना हो तो पचास कुशों से निर्मित कुशब्रह्मा[३]' का अग्निके उत्तर दिशामें संकल्पपूर्वकवरण करके फिर उन्हें पूर्वकी ओर से लाकर दक्षिण दिशामेंउपकल्पित आसनपर उत्तराभिमुख स्थापित करे। ब्रह्मा का स्थान अग्नि के दक्षिण दिशा में होता है। हवनके लिये पृथक् आचार्यहों तो पहले उनका संकल्पपूर्वकवरण कर ले और वरण सामग्री प्रदान करे।

**प्रणीतापात्र स्थापन-**

इसके बाद आचार्य ( होता) ब्रह्माके आदेशसे अग्नि (वेदी) के उत्तरभाग मे प्रादेशमान दूरी छोड़कर पत्तों या कुशों के दो आसन रखें[४]। कुशका अग्रभाग पूर्वकी ओर हो, चतुष्कोणप्रणीतापात्रको बायें हाथमें रखकर दाहिने हाथमें स्थित कर्मपात्रस्थ जलसे उसे भर दे[५] और कुशोंसे ढककरब्रह्माके मुखका अवलोकन कर पहले पश्चिमवाले पते (कुश) के आसनपर रखकर, उठाकर फिर पूर्ववालेआसनपर रख दे।[६]

**अग्नि ( वेदी ) के चारों ओर कुश-आच्छादन (कुशपरिस्तरण )[७]-**

इक्यासी कुशों को ले।[८]उनके बीस-बीसके चार भाग करे। इन्हीं चार भागोंको अग्निके चारों ओर फैलाया जाता है। इसमें ध्यानदेनेकी बात यह है कि कुशसे हाथ खाली नहीं रहना चाहिये। प्रत्येक भाग फैलानेपर हाथमें एक कुश बचारहेगा। इसलिये प्रथम बारमें इक्कीस कुश लिये जाते हैं। वेदीके चारों ओर कुश बिछानेका क्रम इस प्रकारहै

-कुशका प्रथम भाग (२०+१ = २१) लेकर पहले वेदीके अग्निकोणसे प्रारम्भकर ईशानकोणतक उन्हें उत्तराग्र बिछाये। फिर दूसरे भागको ब्रह्मासनसे अग्निकोणतक पूर्वाग्र बिछाये। तदनन्तर तीसरे भागको नैऋत्यकोणसेवायव्यकोणतक उत्तराग्र बिछाये और चौथे भागको वायव्यकोणसे ईशानकोणतक पूर्वाग्र बिछाये। पुन: दाहिनेखाली हाथसे वेदीके ईशानकोणसे प्रारम्भकर वामावर्त ईशानपर्यन्त प्रदक्षिणा करे।

**पात्रासादन-**

हवनकार्यमें प्रयोक्तव्य सभी वस्तुओं तथा पात्रों यथा समूल तीन कुश उत्तराग्र (पवित्रबनानेवाली पत्तियोंको काटनेके लिये), साग्र दो कुशपत्र (बीचवाली सीक निकालकर पवित्रक बनानेके लिये),प्रोक्षणीपात्र (अभाव में दोना या मिट्टीका कसोरा), आज्यस्थाली (घी रखनेका पात्र), चरुपात्रके रूपमें मिट्टी केंदो पात्र (यदि एक ही पात्रमें बनाना हो तो वह बड़ा रहना चाहिये), पाँच सम्मार्जन कुश, सात उपयमन कुश, तीन

समिधाएँ (प्रादेशमात्र लम्बी), स्रुवा , आज्य (घृत ), यज्ञीय काष्ठ (पलाश आदिकी लकड़ी), २५६ मुट्ठी  चावलसे भरे पूर्णपात्र आदिको पश्चिमसे पूर्वतक उत्तराग्र अथवा अग्निके उत्तरकी ओर पूर्वाग्र रख लेहै,

**पवित्रकनिर्माण-**

दो कुशोंके पत्रोंको बायें हाथमें पूर्वाग्र रखकर इनके ऊपर उत्तराग्र  तीन कुशोंको दायेंहाथसे प्रादेशमात्र दूरी छोड़कर मूलकी तरफ रख दे। तदनन्तर दो कुशोंके मूलको पकड़कर कुशत्रयको बीचमेंलेते हुए दो कुशपत्रोंको प्रदक्षिणक्रमसे लपेट ले, फिर दायें हाथसे तीन कुशों  को मोड़कर बायें हाथसे पकड़ लेतथा दाहिने हाथसे कुशपत्रद्वय पकड़कर जोरसे खींच ले। जब दो पत्तोंवाला कुश कट जाय तब उसकेअग्रभागवाला प्रादेशमात्र दाहिनी ओरसे घुमाकर गाँठ दे दे ताकि दो पत्र अलगअलग न हों। इस तरह पवित्रकबन गया। शेष सबको (दो पत्रोंके कटे भाग तथा काटनेवाले तीनों कुशोंको) उत्तर दिशामें फेंक दे।[१]

**पवित्रकके कार्य तथा प्रोक्षणीपात्र का संस्कार** -

पूर्वस्थापित प्रोक्षणीको अपने सामने पूर्वाग्र रखे।प्रणीतामें रखे जलका आधा भाग आचमनी आदि किसी पात्रद्वारा प्रोक्षणीपात्रमें तीन बार डाले। अब पवित्रीकेअग्रभागको बायें हाथकी अनामिका तथा अंगुष्ठसे और मूलभागको दाहिने हाथकी अनामिका तथा अंगुष्ठसेपकड़कर इसके मध्यभागके द्वारा प्रोक्षणीके जलको तीन बार उछाले **(उत्प्लवन)**। पवित्रकको प्रोक्षणीपात्रमेंपूर्वाग्र रख दे। प्रोक्षणीपात्रको बायें हाथमें रख ले। पुनः पवित्रकके द्वारा प्रणीताके जलसे प्रोक्षणीको प्रोक्षितकरे। तदनन्तर इसी प्रोक्षणीके जलसे आज्यस्थाली स्रुवा आदि सभी सामग्रियों तथा पदार्थों का प्रोक्षण करेअर्थात् उनपर

जलके छींटे डाले (**अर्थवत्प्रोक्ष्य**)। इसके बाद उस प्रोक्षणीपात्रको प्रणीतापात्र तथा अग्निकेमध्यस्थान (असंचरदेश) में पूर्वाग्र रख दे।

**घृतको पात्र ( आज्यस्थाली )-में निकालना-**

आज्यपात्रसे घीको कटोरेमें निकालकर उस पात्रकोवेदीके दक्षिणभागमें अग्निपर रख दे ।

**चरु निर्माण-**

बड़े कसोरेके बीचमें जौका आटा गूंथकर दीवार-जैसा बना दे।[१०] इसके बाद एक भागमेंदूध तथा जौका आटा मिलाकर रख दे। दूसरे भागमें दूध तथा दो बार धुले हुए चावल[११] मिलाकर रखदे। तदनन्तर इस पात्रको अग्निपर उत्तर घृतपात्रसे उत्तर भागमें रख दे। खूब चलाकर पकाये। खूब गाढ़ाहोना चाहिये। दोनों भागके चरुओंको चलानेके लिये दो अलग-अलग लकड़ियाँ होनी चाहिये।

**पर्यग्निकरण-**

कुश या किसी लकड़ीको अग्निमें जलाकर दाहिने हाथसे पकड़कर पायस तथा घीकेईशानभागसे प्रारम्भ कर ईशानभागतक दाहिनी ओरसे घुमाये । इस जलती लकड़ीको अग्निमें छोड़ दे। फिरखाली हाथको बायीं ओरसे ईशानभागसे घुमाना प्रारम्भ कर ईशानभागतक ले आये।

**स्रुवा का सम्मार्जन-**

जब घी आधा पिघल जाय तब दायें हाथमें स्रुवाको पूर्वाग्र तथा अधोमुख लेकरआगपर तपाये। पुन: स्रुवाको बायें हाथमें पूर्वाग्र ऊर्ध्वमुख रखकर दायें हाथसे सम्मार्जन कुशके अग्रभागसे स्रुवाके अग्रभागका, कुशके मध्यभागसे स्रुवाके मध्यभागका और कुशके मूलभागसे स्रुवाके मूलभागका स्पर्शकरे अर्थात् स्रुवाका सम्मार्जन करे। स्रुवाका प्रोक्षण करे। उसके बादप्रणीताके जलसे सम्मार्जन कुशकोअग्निमें डाल दे।

**स्रुवाका पुनः प्रतपन-**

अधोमुख स्रुवा को पुनः अग्नि में तपा कर दाहिनी ओर किसी पात्र , पत्ते या कुशों पर पूर्वाग्र रख दे

**घृत पात्र तथा चरुपात्रका स्थापन-**

घीके पात्रको अग्निसे उतारकर पायसके पश्चिम भागसे होते हुएपूर्वकी ओरसे परिक्रमा करके अग्नि(वेदी) -के पश्चिमभागमें उत्तरकी ओर रख दे। तदनन्तर पायस (चरु)-पात्रको भी अग्निसे उतारकर वेदी उत्तर रखे हुए आज्यस्थालीके पश्चिमसे ले जाकर उत्तर भागमें रख दे।

**घृत का उत्प्लवन -**

घृतपात्रको सामने रख ले। प्रोक्षणीमें रखी हुई पवित्रीको लेकर उसके मूलभागकोदाहिने हाथके अंगुष्ठ अनामिकासे और बायें हाथके अंगुष्ठ तथा अनामिकासे पवित्रीके अग्रभागकोपकड़कर कटोरेके घृत को तीन बार ऊपर उछाले घृत का अवलोकन करेऔर यदि घृतमें कोई विजातीयवस्तु हो तो निकालकर फेंक दे। तदनन्तर प्रोक्षणीके जलको तीन बार उछाले और पवित्रीको पुन:प्रोक्षणीपात्रमें रख दे। स्रुवा से थोड़ा घी पायसमें डाल दे।

**तीन समिधाओंकी आहुति-**

ब्रह्माका स्पर्श करते हुए बायें हाथमें उपयमन (सात)- कुशोंको लेकरहृदयमें बायाँ हाथ सटाकर तीन समिधाओंको घीमें डुबोकर मनसे प्रजापतिदेवताका ध्यान करते हुए खड़ेहोकर मौन[१२] हो अग्निमें डाल दे। तदनन्तर बैठ जाय।

**पर्युक्षण (जलधारा देना)-**

पवित्रकसहित प्रोक्षणीपात्रके जलको दक्षिण हाथकी अंजलिमें लेकरअग्निके ईशानकोणसे ईशानकोणतक प्रदक्षिणक्रमसे जलधारा गिरा दे। पवित्रकको बायें हाथमें लेकर फिरदाहिने खाली हाथको उलटे अर्थात् ईशानकोणसे उत्तर होते हुए ईशानकोणतक ले आये **(इतरथावृत्तिः)**और पवित्रकको दायें हाथों लेकर प्रणीतामें पूर्वाग्र रख दे। तदनन्तर हवन करे।

## हवन-विधि

सर्वप्रथम प्रजापतिदेवताके निमित्त आहुति दी जाती है। तदनन्तर इन्द्र, अग्नि तथा सोमदेवताको आहुतिदेनेका विधान है । इन चार आहुतियोंमें प्रथम दो आहुतियाँ '**आघार**'नामवाली हैं एवं तीसरी और चौथीआहुति '**आज्यभाग**'नामसे कही जाती है। ये चारों आहुतियाँ घीसे देनी चाहिये। इन आहुतियोंको प्रदानकरते समय ब्रह्मा कुशके द्वारा हवनकर्ताके दाहिने हाथका स्पर्श किये रहे, इस क्रियाको '**ब्रह्मणान्वारब्ध**'कहते हैं।

दाहिना घुटना पृथ्वीपर लगाकर स्रुवा में घी लेकरप्रजापतिदेवताका ध्यान कर निम्न मन्त्रका मनसे
उच्चारण कर प्रज्वलित अग्निमें आहुति दे।

**ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम।**
कहकर वेदी या कुण्डके मध्यभागमें आहुति दे।(स्रुवा से बचे घीको प्रोक्षणीपात्रमें छोड़े।)
आगेकी तीन आहुतियाँ इस प्रकार बोलकर दे
(२) **ॐ इन्द्राय स्वाहा, इदमिन्द्राय न मम** - कहकर वेदी या कुण्डके मध्यभागमें आहुति दे। (स्रुवा मेंबचे घीको प्रोक्षणीपात्रमें छोड़े।)
(३) **ॐ अग्नये स्वाहा, इदमग्नये न मम** - कहकर वेदी या कुण्डके उत्तरपूर्वार्धभागमें आहुति दे।(स्रुवामें बचे घीको प्रोक्षणीपात्रमें छोड़े।)

(४) **ॐ सोमाय स्वाहा, इदं सोमाय न मम**- कहकर वेदी या कुण्डके दक्षिणपूर्वार्धभागमें आहुतिदे। (स्रुवामें बचे घीको प्रोक्षणीपात्रमें छोड़े।)

अब ब्रह्मा कुशका स्पर्श होतासे हटा ले। तदनन्तर द्रव्यत्यागका संकल्प करे

**द्रव्यत्याग**

हाथमें जल लेकर इस प्रकार बोलकर जल छोड़ दे- '**अस्मिन् होमकर्मणि याः याः यक्षमाणदेवताताभ्यः ताभ्यः इदं हवनीयद्रव्यं मया परित्यक्त ॐ तत्सद्यथादैवतमस्तु, न मम।'**

**अग्निका ध्यान, आवाहन तथापूजन-**

हाथमें पुष्प लेकर निम्न मन्त्रोंद्वारा अग्निका'ध्यानआवाहन करे-

**सर्वतः पाणिपादं च सर्वतोऽक्षि शिरोमुखः । विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥**

**अग्नि प्रज्वलितं वन्दे जातवेदंहुताशनम् । सुवर्णवर्णममलं समिद्धं सर्वतोमुखम् ॥**

तदनन्तर गन्ध, अक्षत, पुष्प आदि उपचारोंसे अग्निका पूजन करे और **वराहुति** प्रदान करे

**तत : अग्ने सप्तजिह्वानां पूजयेत्**

ॐ कनकायै नमः, ॐ रक्तायै नम :, ॐ कृष्णायै नमः, ॐ उद्गारिण्यै नमः, ॐ उत्तरमुखे सुप्रभायै नमः ॐ बहुरूपायै नमः, ॐ अतिरिक्तायै नमः ।

तदनन्तर द्रव्यत्यागका संकल्प करे॥

तदनन्तर वराहुति प्रदान करे-

**वराहुति**

विघ्नहर्ता भगवान् गणपति तथा देवी अम्बिकाके निमित्त दी गयी आहुति **'वराहुति'** कहलाती है। वराहुतिके मन्त्र इस प्रकार हैं-

**गणपतिके लिये-**

ॐ गणानां त्वा गणपति ꣳ हवामहे प्रियाणां त्वा प्रियपति ꣳ हवामहे निधीनां त्वा निधिपति ꣳ हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम्॥ स्वाहा॥

**अम्बिकाके लिये-**

ॐ अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्॥ स्वाहा॥

नवग्रह-होम

यहाँ ग्रहोंके नाममन्त्रोंसे आहुतियाँ दी गयी हैं। नवग्रहोंकी आहुति नवग्रह **शाकल्य**[१२] से नवग्रह समिधा से अथवा घी से देनी चाहिये या दोनों से भी दी जा सकती है। शाकल्य **मृगीमुद्रा**[१३] से ग्रहण करना चाहिये। आहुति **'स्वाहा'** इस शब्दके उच्चारणके साथ देनी चाहिये।

ग्रह हवन के मन्त्र इस प्रकार हैं-

(१) ॐ आदित्याय स्वाहा।

(२) ॐ सोमाय स्वाहा॥

(३) ॐ भौमाय स्वाहा ॥

(४) ॐ बुधाय स्वाहा।

(५) ॐ बृहस्पतये स्वाहा।

(६) ॐ शुक्राय स्वाहा।

(७) ॐ शनैश्चराय स्वाहा।

(८) ॐ राहवे स्वाहा।

(९) ॐ केतवे स्वाहा।

नवग्रह-होमके अनन्तर प्रधान देवता के उद्देश्यसे हवन करना चाहिये।

## प्रधान होम

सत्यनारायणकथा- कर्मके प्रधान देवता भगवान् श्रीसत्यनारायण देव हैंअतः प्रथम , उनके द्वादशाक्षर मन्त्र

**"ॐ नमो भगवते वासुदेवाय'** का कम-से-कम १०८ बार-एक माला अथवा समयके अनुकूल यथाशक्ति जप करके मन्त्रके साथ अन्तमें स्वाहा बोलकर जपका दशांश हवन करना चाहिये।[५] एक मालासे आहुति न हो सके तो कमकम दस आहुतियाँ देनी ही -से- चाहिये।

## अग्निका उत्तरपूजन तथा प्रार्थना-

प्रधान हवनके अनन्तर हवनकी सफलताकी सिद्धिके लिये '**ॐ स्वाहास्वधायुताय बलवर्धननामाग्नये नमः**-इस मन्त्रसे अग्निदेवका गन्ध आदि उपचारसे संक्षेपमें उत्तर ' पूजन करे।

तदनन्तर इस प्रकार प्रार्थना करे-

**श्रद्धां मेधां यशः प्रज्ञां विद्या बुद्धि बलं श्रियम्।**

**आयुष्यं द्रव्यमारोग्यं देहि मे हव्यवाहन॥**

इसके बाद'**ॐ अङ्गानि च मा आप्यायन्ताम्'** कहकर हाथोंसे अग्निदेवको अपने सम्पूर्ण शरीरमें धारण करनेकी भावना करे।

## स्विष्टकृत हवन

सुवामें घी रखकर दाहिना घुटना जमीनमें लगा निम्न मन्त्रसे आहुति दे।

**ॐ अग्नये स्विष्टकृते स्वाहाइदमग्नये स्विष्टकृते न मम ,**। शेष घृत)प्रोक्षणीमें डाले।(

## भूः आदि नव आहुतियाँ

प्रत्येक आहुतिके बाद सुवासे बचा घी प्रोक्षणीपात्रमें डाले।

(१) ॐ भूः स्वाहा, इदमग्नये न मम।

(२) ॐ भुवः स्वाहा, इदं वायवे न मम।

(३) ॐ स्वः स्वाहा, इदं सूर्याय न मम।

(४) ॐ अग्नीवरुणाभ्यां स्वाहा, इदमग्नीवरुणाभ्यां न मम।

(५) ॐ अग्नीवरुणाभ्यां स्वाहा, इदमग्नीवरुणाभ्यां न मम।

(६) ॐ अग्नये स्वाहा, इदमग्नये अयसे न मम। ।

(७) ॐ वरुणाय सवित्ने विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च स्वाहा इदं वरुणाय सवित्ने विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वभ्यश्च न मम।

(८) ॐ वरुणायादित्यायादितये स्वाहा, इदं वरुणायादित्यादितये न मम।

(९) ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम।

## अग्निप्रदक्षिणा तथा त्यायुष् धारण

तदनन्तर यजमान अग्निकी प्रदक्षिणा करे और आचार्य घृतयुक्त खुवासे घृतयुक्त भस्म ग्रहणकर अनामिका --अँगुलीसे पहले स्वयं भस्म धारण करेतदनन्तर श्रोताओंको , त्यायुष् धारण कराये। त्यायुष् धारणकी विधि इस प्रकार है-

'**ॐ त्यायुषं जमदग्नेः**' कहकर ललाटमें, '**ॐ कश्यपस्य त्यायुषम्**' कहकर कण्ठमें, '**ॐ यद्देवेषु त्यायुषम्** 'कहकर दक्षिण बाहुमूलमें और '**ॐ तन्नोऽस्तु व्यायुषम्**' कहकर हृदयमें त्यायुष धारण करना चाहिये।

## संस्रवप्राशन और दक्षिणादान

प्रोक्षणीपात्र के जलमें आहुतिसे बचा जो घृत छोड़ा गया हैउसको यजमान थोड़ा ग्रहण , कर ले अथवा सूँघ ले इसीका नाम ,**संस्रवप्राशन** है। तदनन्तर आचमन करे। आचार्य

आदि ब्राह्मणोंको दक्षिणा तथा भूयसी दक्षिणा प्रदान करे। तदनन्तर प्रधान देवता / भगवान् नारायणका उत्तरपूजन करे।-

**अथ सर्वे ऋत्विजः तत्तत्कर्म विधिवदनुष्ठाय प्रधान**

**कर्मान्ते पूर्णाहुतिमाचरन्ति ।**

**अथ पूर्णाहुतिः ।**

**इदं फलं मया देव स्थापितं तु हुताशन ।**

**तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ इति फलं समर्प्य,**

**आचार्यः स्रुचि द्वादशवारं चतुर्वारं वा स्रुवेणाज्यमादाय द्वाभ्यां**

**शङ्खमुद्रया गृहीत्वा यजमानान्वारब्धस्तिष्ठन् पूर्णाहुति जुहुयात् ।**

**तत्र मन्त्राः -**

**देवा यज्ञभुजो ये ते साङ्गं कुर्वन्त्विमां क्रतुम् ।**

**रक्षत्वस्मान् सदा यज्ञे तेभ्य आज्याहुति नमः ॥**

**यो विष्णुस्त्रिपदैः सर्वमाक्रम्य भुवनत्रयम् ।**

**अधितिष्ठति सर्वात्मा तस्मा आज्याहुति नमः ॥**

त्वं यज्ञपुरुषः साक्षादग्ने त्वं यज्ञ एव च ।

वैगुण्यदोषशान्त्यर्थं तुभ्यमाज्याहुति नमः ॥

एह्येहि सर्वामर हव्यवाह मुनिप्रवर्यैरभितोभिजुष्ट ।

तेजोवता लोकगणेन सार्धं ममाध्वरं पाहि कवे नमस्ते ॥

कल्याणदात्रीं कल्याणीं सर्वकामप्रपूरणीम् ।

हवनस्य फलप्राप्त्यै पूर्णाहुत्यै नमो नमः ॥

## वसोर्धारा

दिव्यवस्त्रा दिव्यदेहा नानालङ्कारभूषिताः ।

वसोर्धारा महाभागा वरदाः सन्तु मे सदा ॥

शुद्धस्फटिकसङ्काशा दिव्यायुधकरावृताः ।

एकभोगाः साक्षसूत्राः वसोर्धारा नता वयम् ॥

भो अग्नेसर्वदेव !वैश्वानर !हव्यवाहन !मय!सर्वदेवतामुख ! जातवेदस्तनूनपात्कृशानो हुतभुग्विभावसो बृहद्भानो हिरण्यरेतः सप्तार्चिर्दमनश्चित्रभानो ! ज्वलनपावकेळाह्वयाय तुभ्यमिमां सर्वकर्मप्रपूरणीं पूर्णाहुति ददामि । एनां गृहाण । गृहाणास्माकमनामयमनिशं कुरु कुर्विष्टं देहि देहि सर्वतोस्मान्दुरितदुरिष्टात्पाहि पाहि भगवन्नमस्ते नमस्ते । ह्रीं अग्नये नमः । अग्नये इदं न मम ॥

पूर्णाहुतिमुहूर्तः सुमुहूर्तोस्त्विति भवन्तो

ब्रुवन्तु । सुमुहूर्तोस्तु । इति प्रतिवचनम् ॥ इति ॥

## अथ कर्मान्ते श्रेयोग्रहणम् ॥

आचार्यः स्वस्त्यस्तु दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु ।

भवन्नियोगेन मया एभिर्ब्राह्मणैस्सह यत्कृतं अमुक कर्म तदुत्पन्नं यच्छ्रेयस्तुभ्यं सम्प्रददे ।

तेन त्वं आयुष्मान् आरोग्यवान् पुत्रपौत्रवान् धनधान्यवान् भव ।

इत्युक्त्वा यजमानाञ्जलौ अक्षतजलं निक्षिपेत् ।

ततो यजमानः ब्राह्मणानभ्यर्च्य, भूयसीं दक्षिणां ददाति ।

सन्तुष्टास्ते आशिषमाशास्ते ।

## आशीर्वादमन्त्राः

मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ।

शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥

आरोग्यं सविता तनोतु भवतामिन्दुर्यशो निर्मलं,

भूति भूमिसुतस्सुधांशुतनयः प्रज्ञां गुरुर्गौरवम् ।

काव्यः कोमलवाग्विलासमतुलं मन्दो मुदं सर्वदा,

राहुर्बाहुबलं विरोधशमनं केतुः कुलस्योन्नतिम् ॥

दिवा वा यदि वा रात्रौ विघ्नशान्तिर्भविष्यति ।

नरनारीनृपाणां च भवेद्दुस्स्वप्ननाशनम् ॥

ऐश्वर्यमतुलं तेषामारोग्यं पुष्टिवर्धनम् ।

ग्रहनक्षत्रजाः पीडास्तस्कराग्निसमुद्भवाः ॥

ताः सर्वाः प्रशमं यान्ति व्यासो ब्रूते न संशयः ।

न च चोरभयं, न च सर्पभयं, न च व्याघ्रभयं,

न च मृत्युभयं, यस्यापमृत्युर्न च मृत्युः ।

स सर्वं लभते । स सर्वं जयते ॥

यस्त्वन्निमित्तेन मया कृतोऽयं स पुण्यसारस्तव दीयते मया ।

तस्मात्वदीयं परिगृह्यसारं सपुण्यवान् पुण्यसमृद्धिमान् भव ॥

ह्रीं श्रीर्वर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते ।

धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥

टिप्पड़ी--

१-अलगअलग- कार्यों में अग्निके अलगअलग- नाम होते हैं। जो कार्य करे, उसमें उसी अग्निका आवाहनपूजन- आदि करना चाहिये। पौष्टिक कर्ममें प्रयुक्त अग्निका नाम 'बलवर्धन' है'-पौष्टिके बलवर्धनः ।'

२. (क) तिल, तिलका आधा चावल, चावलका आधा जौ, जौका आधा शर्करा तथा शर्कराका आधा घी मिलाकर बनाया गया हवनीय द्रव्य शाकल्य कहलाता है

(ख) नवग्रहोंकी पृथक्पृथक्- समिधाएँ भी होती हैं। जैसेसूर्यके— लिये अर्क (मदार), चन्द्रके लिये,पलाश- भौम (मंगल)-के लियेखदिर- (खैर), बुधके लियेअपामार्ग- (चिचिड़ा), बृहस्पतिके लिये,पीपल- शुक्रके लियेउदुम्बर- (गूलर), शनैश्चर (शनि)-के लिये,शमी- राहुके लियेदूर्वा- तथा केतुके लियेकुश।- प्रादेशमात्र (अँगूठेसे तर्जनीके बीचकी दूरी( लम्बाईवाली इन समिधाओंको घीमें डुबोकर नवग्रहोंके लिये आहुति दी जाती है।

३- अनामिका, मध्यमा तथा अँगूठेको मिलाकर बनायी गयी मुद्रा 'मृगीमुद्रा' कहलाती है। इसी मुद्रासे शाकल्य ग्रहण करके उत्तान हाथसे आहुति देनी चाहिये।

४- यहाँ एक ही आहुति दी गयी है, सुविधाके अनुसार प्रत्येकके लिये ८१०- या अधिक आहुतियाँ दी जा सकती हैं।

५- उत्तम पक्ष तो यह है कि किसी ब्राह्मणका मन्त्रके जपके लिये 'जापक' के रूपमें वरण कर लिया जाय। जितना जप हो उस जपके दसवें भागकी संख्यामें हवन करना चाहिये। यदि दस माला मन्त्रजप- हो तो एक मालासे हवन करना चाहिये या एक माला जप हो तो

दसकी संख्यामें मन्त्राहुति देनी चाहिये। भगवान् सत्यनारायणका दूसरा मन्त्र भविष्यपुराण (अ० २५में-( इस प्रकार आया है, इससे भी जप किया जा सकता है और आहुति दी जा सकती है-

मन्त्र'- **नमो भगवते नित्यं सत्यदेवाय धीमहि। चतुःपदार्थदात्रे च नमस्तुभ्यं नमो नम':। स्वाहा॥**

**॥इति पौराणिक पूजन प्रयोग ॥**